प्रयोजकव्यापारे णिच् । लुङ् आट् चङि णिलोपः । 'द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य ६ । १ । २ ।' इति हिशब्दस्य द्विर्वचनम् । 'नन्द्राः संयोगादयः ६ । १ । ३ ।' इति नकारस्य प्रतिषेधः । अभ्यासकार्यम् । आञ्जिहदिति रूपम् । राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् । ग्रहेः सन् । 'सनि ग्रहगुहोश्च ।७।२।१२ ।' इति इट्प्रतिषेधः । द्विर्वचनादि । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ।' इति सनः कित्त्वम् । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ।' इति सम्प्रसारणम् । ढत्वभष्भावौ । गकारस्य घकारः । कत्वषत्वे । पश्चाण्णिच् । तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् । तेन भविष्यदनद्यतने लुट् न भवति ॥ ४० ॥

एतौ स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू ।
जनं समस्तं जनकाऽऽश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥

एतावित्यादि—एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव । जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कं कारितवन्तौ । सिंहाविव । 'ऊह वितर्के' इत्यस्माद्धातोः ण्यन्तात् कर्तुः क्रियाफलाविवक्षायां 'णिचश्च । १ । ३ । ७४ ।' इति तङ् न भवति । चङि णिलोपस्य स्थानिवद्भावात् 'अजादेर्द्वितीयस्य । ६ । १ । २ ।' इति द्विर्वचनम् । ऊहमाह—मित्रावरुणौ आदित्यवरुणौ । 'देवताद्वन्द्वे च । ६ । ३ । २६ ।' इत्यानङ् । तयोर्महानुभावत्वात् । सोमरसं पिपासू पातुमिच्छू । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२। ३ । ६९ ।' इति षष्ठीप्रतिषेधः । एतावागतौ । आङ्पूर्वस्येणो निष्ठायां रूपम् । किमश्विनौ अश्विनीकुमारौ सोमरसं पिपासू एताविति । एवं जनम् औजिहताम् । सुशब्दपाठे एतौ सुमित्रेति पाठः । एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः ॥ ४१ ॥

अजिग्रहत्तं जनको धनुस्तद् येनाऽर्दिदद्दैत्यपुरं पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ ४२ ॥

अजिग्रहदित्यादि—येन धनुषा दैत्यपुरं पिनाकी महादेव आर्दिदत् हिंसितवान् । अर्दैः स्वार्थिकण्यन्तात् चङि 'अजादेर्द्वितीयस्य ।७।१।२।' इति दिशब्दो द्विरुच्यते रेफस्य प्रतिषेधः । 'तद्धनुस्तं रामं जनकः अजिग्रहत् ग्राहितवान् । अनेन धनुषा त्रिपुरं दग्धमिति । ग्रहेर्हेतुमण्ण्यन्ताच्चङि णिलोपः । 'णौ चङ्युपधाया ह्रस्वः ।७।४।१।' इति ह्रस्वः । सन्वद्भावादित्वम् । ग्रहेश्च

बुद्ध्यर्थत्वात् । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ।१।४।५२।' इति रामस्य कर्मसंज्ञा । अस्य रामस्य बाह्वोर्भुजयोर्बलं जिज्ञासमानो जनकः । एवंभूतं धनुः हसन् स्मयमानो रघुनन्दनो रामः अभांक्षीत् भग्नवान् । भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः । तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्[1] ॥ ४२ ॥

ततो नदीष्णान्पथिकान्गिरिज्ञानाह्वायकान्भूमिपतेरयोध्याम् ।
दित्सुः सुतां योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ ४३ ॥

तत इत्यादि—धनुर्भङ्गादनन्तरं महानयमिति ज्ञात्वा जनकः सुतां दुहितरं दित्सुः दातुमिच्छुः । ददातेः । 'सनि मीमाघुरभलभशकपतपदामच इस् ।७।४।५४।' इति अच इस् । द्विर्वचनम् । 'अत्र लोपोऽभ्यासस्य ।७।४।५८।' इत्यभ्यासलोपः । 'सः स्यार्धधातुके ७ । ४ । ७९ ।' इति तत्त्वम् । 'सनाशंसभिक्ष उः ।३।२।१६८।' भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्तरि ण्वुल् । 'आतो युक् चिण्कृतोः।७।३।३३।' कृत्प्रयोगे भूमिपतेः कर्मणि षष्ठी । तान् अयोध्यां व्यसर्जयत् विसर्जितवान् । विपूर्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपम् । गत्यर्थत्वात् द्विकर्मकता । नद्यां स्नान्तीति नदीष्णाः । 'सुपि स्थः ।३।२।४।' योगविभागात्कः । 'आतो लोप इटि च ।६।४।६४।' 'निनदीभ्यां स्नातेः कौशले ।८।३।८९।' इति षत्वम् । नदीं तरीतुं कुशलानित्यर्थः । पथिकान् पथि कुशलान् । 'तत्र कुशलः पथः ।५।२।६३।' इति ठक् । गिरिज्ञान् यथाप्रदेशं गिरिज्ञान् 'इगुपधज्ञाप्रीकिरः कः।३।१।१३५।' इति कः । तुरंगैः अश्वैः करणभूतैः । युध्यन्त इति योधाः । पचाद्यच् । तानाहर्तुं क्षमैः । 'वयसि च ।३।२।१०।' इत्यच् 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' इत्यौणादिकस्तन् । म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्याः । दिगादेराकृतिगणत्वात् यत् । आकृतिगणत्वस्य लिंगं 'देवमनुष्यपुरुषपुरुमर्त्येभ्य' इति निर्देशः । मुखमेव मुख्यः प्रधानम् । 'शाखादिभ्यो यः ।५।३।१०३।' मर्त्येषु[2] मुख्यो मर्त्यमुख्यः । मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः । जनक इत्यर्थः ॥४३॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा ।
आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत् ॥४४॥

---

१ अत्र समासपुनरात्तत्वं दोषः । २ अत्र 'मर्त्यानाम्' इति तु न युक्तः पाठः, 'न निर्धारणे २।२।२०' इति षष्ठीनिषेधात् ।

क्षिप्रमित्यादि—आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रु
सूनुवृत्तिर्येन स राजा दशरथः। सूयत इति सूनुः पुत्रः 'दाभाभ्यां नुः' इ
वर्तमाने 'सुवः किच्च' इत्यौणादिको नुप्रत्ययः। ततोऽनन्तरमेव क्षि
शीघ्रम्। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वि
वृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशी
डुहसिसिधिशुभिभ्यो रक्।' इति रक्। क्रियाविशेषणं चैतत्। मिथिला
गच्छत्। भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुपक्तव्यम्। गमेर्लङि 'इषुगमिय
छः।७।३।१७।' अध्वानम् अलं गामिनो ये तुरंगा अश्वाः ते अध्वन्य
अलं गामीत्यस्मिन्नर्थे 'अध्वनो यत्खौ।५।२।१६।' इति यत्।
न्नाभावकर्मणोः।६।४।१६८।' इति प्रकृतिभावः। तैः साधु याती
साधुकारिणि णिनिः। अध्वन्यतुरंगयायी। एवं च कृत्वा अग्लानयानः
विद्यते ग्लानं ग्लानिर्यस्मिन्याने तत् अग्लानं यानं यस्येति। तादृ
तादृशैस्तुरङ्गैः सुखयान इति भावः। ग्लानेति भावे निष्ठा। संयोगादेरा
धातोर्यण्वतः।८।२।४३।' इति नत्वम्। वृद्धतमोऽपि यविष्ठवत्। युवशब्दस्
ष्ठनि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरम्पूर्वस्य च गुणः।६।४।१५६
इति यणादिपरलोपः पूर्वस्य च गुणः। पश्चात् 'तेन तुल्यं क्रियाचेद्वतिः।५।
११५।' इति वतिः॥ ४४॥

वृन्दिष्ठमार्चीद्वसुधाऽधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।
सदृङ् महान्तं सुकृताऽधिवासं बंहिष्ठकीर्तिर्यशसा वरिष्ठम्॥ ४५

वृन्दिष्ठमित्यादि—तं राजानमेतमायान्तं जनक आर्चीत् पूजितवान्
अर्चेर्लुङि रूपम्। वृन्दिष्ठं वृन्दारकतमम् प्रशस्ततममित्यर्थः। केषां वसुधाधि
पानां पृथ्वीपतीनाम्। प्रेष्ठं प्रियतमम्। गुरुवत् गुरुणा तुल्यं वर्तमानं गरि
ष्ठम् गुरुतमम्। सदृक् समानान्ययोश्चेत्युपसंख्यानाद् दृशेः क्विन्। रूढिशब्द
श्चायम्। नात्र दर्शनक्रिया विद्यते। अभिजनादिभिस्तुल्यो जनक इत्यर्थः
महान्तं महानुभावं सदृशां मध्ये महान्तम्। सुकृताधिवासं सुकृतनिलयम्
अधिवसत्यस्मिन्निति अधिकरणे घञ्। बंहिष्ठा बहुलतमा कीर्तिर्यस्य स बंहिष्ठ
कीर्तिः। यशसा वरिष्ठं गुरुतमम्। अत्र वृन्दारकप्रियगुरुबहुलोरूणामिष्ठ

---

१ अध्वनि यथेष्टं गमने योग्यैः अध्वन्यैः इत्यर्थः। २ 'साधिष्ठद्राघिष्ठस्फे
ष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः' इत्यमरः। ३ 'प्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः' इत्यमरः।

ासंख्यं प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहि-
र्पित्रब्द्राघिवृन्दाः ।६।४।१५७।' इति वृन्दप्रगर्वेहवर. इत्येते आदेशा
न्ति ॥ ४५ ॥

**त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः।**
**विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥**

त्रिवर्गेत्यादि—तं दशरथं मैथिलो जनकः वाक्यमिदं बभाषे ।ब्रवीत्यर्थग्र-
ात् द्विकर्मकता। किं तद्वाक्यमित्याह—असाविन्द्रो भवन्तम् एकासनमध्या-
यन् आरोपयन् विवेकदृश्वत्वमगादिति संबन्धः। आसनस्य 'अधिशीङ्-
ासां कर्म । १ । ४ । ४६ ।' इत्यधिकरणे कर्मसंज्ञा। भवन्तमिति 'गतिबुद्धि-
यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता सणौ ।१ । ४ । ५२।' इत्यस्ते-
यन्तावस्थायामकर्मकत्वात्। पारंगामीत्यस्मिन्वाक्ये। 'अवारपारात्यन्तानु-
मंगामी ।५। २ । ११।' इति पारशब्दात् खः। तत्र विगृहीताद्विपर्यस्तग्र-
ात्। त्रिवर्गस्य धर्मार्थकामस्य पारीणमिति षष्ठीसमासः। त्रिवर्गपारीणं
न्तम्। सुराणां मध्ये स एवैको विवेकदृश्वत्वं विवेकज्ञतामगात्। 'इणो गा
ङि। २ । ४ । ४५ ।' 'गातिस्थाघुपाभूभ्यः—२ । ४ । ७७ ।' इति सिचो
क्। विवेकं दृष्टवानिति दृशेः क्वनिप् ॥ ४८ ॥

**हिरण्मयी साललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाऽचिरप्रभा।**
**शशाङ्ककान्तेरधिदेवताऽऽकृतिः सुता ददे तस्य सुताय मैथिली ४७**

हिरण्मयीत्यादि—तस्य दशरथस्य सुताय रामाय। सूयत इति सुतः।
षु प्रसवैश्वर्ययोः' इत्यस्मात् कर्मणि निष्ठा। सुता मैथिली सीता ददे जनके-
यर्थात्। कर्मणि लिट्। मैथिलस्यापत्यं 'अत इञ् । ४ । १ । ९५ ।' तद-
ान् 'इतो मनुष्य जातेः । ४ । १ । ६५ ।' इति ङीप्। रामस्य ज्येष्ठत्वात्त-
व कविना परिणय उक्तः न शेषाणाम्। तेन अन्या अपि तदैव दुहितरो
ताः। हिरण्मयी सुवर्णनिर्मितेव साललता वृक्षलता। सुवर्णच्छवित्वात् तस्याः
रण्यविकार इति मयट्' दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवा-
नायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । ६ । ४ । १७४ ।'
ते यलोपनिपातनम्। जङ्गमा संचारिणी नतु स्थावरा। अत्यर्थं गच्छतीति
ङ् 'नुगतः ७ । ४ । ८५ ।' इति नुक्। यङन्तात्पचाद्यचि यङोऽचि
। २ । ४ । ७४ ।' इति यङो लुक् च्युता दिवः आकाशात्पतिता। अचि-
भेव विद्युदिव तेजस्वित्वात् तन्वीत्वाच्च। किन्तु स्थास्नुरचञ्चला। सा तु

१ 'त्रिवर्गो धर्म्मकामार्थैः' इत्यमरः।

चञ्चलेति व्यतिरेकः। 'ऊङुतः। ४। १। ६६।' इति ऊङ् न भवति क्रियाशब्दत्वात्। तत्र मनुष्यजातेरिति वर्तते। शशाङ्ककान्तेर्याधिदेवता अधिष्ठात्री देवता तस्या आकृतिर्यस्याः। सौम्यात्वात्। आक्रियते अनयेत्याकृतिः संस्थानम्। 'अकर्तरि च कारके सञ्ज्ञायाम्। ३। ३। १९।' इति स्त्रियां क्तिन्॥ ४७॥

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः।
सद्रत्नमुक्ताफलभर्मशोभां सम्वंहयन्तीं रघुवर्ग्यलक्ष्मीम्॥ ४८॥

लब्धामित्यादि—ततो दानानन्तरम् लब्धां तामात्मनीनाम् आत्मने हिताम्। 'आत्मन्विश्वजनभोगोत्तरपदात्खः। ५। १। ९।' इति खः। रामः उदवोढ। वहेः स्वरितेत्त्वात्कर्तुः क्रियाफलविवक्षया तङ्। विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य सः पूर्ववत् खः। सती उत्कृष्टा रत्नादिशोभा यस्याः। तैरलंकृतत्वात्। तां सद्रत्नमुक्ताफलभर्मशोभाम्। भर्म स्वर्णम्। सर्वधातुभ्यो मनिन्। 'भर्मभूषाम्' इति पाठान्तरम्। सद्रत्नादि भूषा अलङ्कारो यस्या इति योज्यम्। 'गुरोश्च हलः। ३। ३। १०३।' इत्यकारः। सम्वंहयन्तीं संवहुलामतिस्थिरां कुर्वाणाम्। वहुलशब्दात् 'तत्करोति तदाचष्टे' इति णिचि इष्टवद्भावात् 'प्रियस्थिरस्फिरोरुवहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्वंहिगर्वर्षित्रप्द्राघिवृन्दाः। ६। ४। १५७।' इति वंहादेशः। पश्चात्तदन्तस्य संपूर्वस्य साधनेन योगः। कामित्याह—रघुवर्ग्यलक्ष्मीमिति। रघुवर्गे भवां विभूतिम्। 'वर्गान्ताच्च। ४। ३। ६३।' इत्यनुवृत्तौ 'अशब्दे यत्खावन्यतरस्याम्। ४। ३। ६४।' इति यत्॥ ४८॥

सुप्रातमासादितसंमदं तद् वन्दारुभिः संस्तुतमभ्ययोध्यम्।
अश्वीयराजन्यकहास्तिकाऽऽढ्यमगात् सराजं वलमध्वनीनम्॥ ४९॥

सुप्रातेति—विवाहं निर्वर्त्य प्रभाते अयोध्याभिमुखं तद्वलं दशरथस्यागात् गतवत्। सुप्रातं निरुपद्रवत्वात्। शोभनं प्रातर्दिनमुखं यस्य वलस्य। 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाजपदप्रोष्ठपदाः। ५। ४। १२०।' इति समासान्तष्टिलोपश्च निपात्यते। आसादितसंमदं प्राप्तहर्षम्। 'प्रमदसम्मदौ हर्षे। ३। ३। ६८।' इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम्। अभ्ययोध्यम् अयोध्याभिमुखम्। 'लक्षणेनाऽभिप्रती आभिमुख्ये। २। १। १४।' इति अव्ययीभावः। अश्वानां समूहो अश्वीयम्। 'केशा-

---

१ 'भर्म स्यात् काञ्चने भृतौ' इति मेदिनी २ आसादितः सम्मदो येन तादृशमित्यर्थः। 'प्रमोदामोदसम्मदाः' इत्यमरः। २ 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः।

ाभ्यां यञ्छौ— ४ । २ । ४८ ।' इति छः । राजन्यानां क्षत्रियाणां समू-
राजन्यकम् 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९।'
ते वुञ् । 'प्रकृत्याके राजन्यमनुष्ययुवानः' इति प्रकृतिभावादपत्ययकार-
पो न भवति । हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्
।२।४७।' इति ठक् । एषां सेनाङ्गत्वात् द्वन्द्व एकवद्भावः । तेनाढ्यमुप-
तमिति तृतीयेति योगविभागात् समासः । सह राज्ञेति विगृह्य साकल्यव-
ने यौगपद्ये वाव्ययीभावः । 'अव्ययीभावे चाकाले । ६ । ३ । ८१ ।'
ति सभावः । 'अनश्च' ।५।४।१०८।' इति टच् समासान्तः । अध्वनी-
मध्वानमलंगामीति तं तादृशम् 'अध्वनो यत्खौ ।५।२।१६।' 'आत्माध्वानौ
। ६।४।१६९।' इति प्रकृतिभावः ॥ ४९ ॥

विशङ्कटो वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निरैति स्म रामः पथि जामदग्न्यः॥५०॥

विशङ्कटेत्यादि—एवमस्य गच्छतः पथि मार्गे । सप्तम्यां 'भस्य टेर्लोपः
।१।८८।' पुरस्तादग्रतः । 'अस्ताति च । ५।३।४० ।' इति पूर्वस्य पुरादेशः ।
मो जामदग्न्यः । जमदग्नेरपत्यं रामोऽयम् । गर्गादिपाठाद्यञ् । स ऐति स्म
ागतवान् । आङ्पूर्वादिणो लट् । 'एत्येधत्यूठ्सु ।६।१।८९।' इति वृद्धिः ।
ासि विशङ्कटो वक्षसि विशालः 'वेः शालच्छङ्कटचौ । ५।२।२८।' इति
ङ्कटच् । बाणः पाणावस्येति बाणपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ,
प्तम्यन्तस्य परनिपातः । संपन्नो निष्पन्नो यस्तालवृक्षः स प्रमाणं यस्य स
थोक्तः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ ।' भीयते अस्मादिति
ीष्मः । 'भियः पुग्वा' इति औणादिको मक्प्रत्ययः । वा पुगागमश्च ।
ीमादयोऽपादाने ।३।४।७४।' इत्यपादाने साधुः । धनुष्मान् धनुपा
क्तः । संसर्गे मतुप् । जानुनोः समीपमुपजानु । सामीप्येऽव्ययीभावः ।
पजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः ॥ ५० ॥

उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु माऽतियासीः ।
पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीपुरूचे ॥ ५१ ॥

---

१ 'अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ।' इत्यमरः ।
: 'हास्तिकं गजता वृन्दे' इत्यमरः । ३ 'अध्वनीनोऽध्वगोऽध्वन्यः' इत्यमर
। 'विशङ्कटं पृथु बृहत्' इत्यमरः । ५ भयङ्कर इत्यर्थः । 'दारुणं भीषणं भीष्म
त्यमरः ।

उच्चैरित्यादि—उच्चैर्महता ध्वनिना राघवं दाशरथिम् एवं वक्ष्य आहूतवान् । 'स्पर्धायामाङः ।१।३।३१।' इत्यात्मनेपदम् । 'आत्मनेपदे स्याम् ।२।४।४४'। इति च्लेरङ् । धनुः सबाणं कुरु । धनुषि बाणमारे युद्धाय सज्जीभवेत्यर्थः । मातियासीः मातिक्रम्य गमनं कार्षीः । यातेर्मे लुङ् । अडभावः । 'यमरमनमातां सक् च ।७।२।७३।' इति इट् । 'इट ८।२।२८।' इति सिचा लोपः । अथ क्षितीन्द्रो दशरथः तमू 'ब्रुवो वचिः ।२।४।५४।' आदेशस्य स्थानिवद्भावेन कर्तुः क्रियाफलविव तङ् न । वचेः परस्मैपदित्वात् । 'वचिस्वपियजादीनां किति ।६।१।१५।' सम्प्रसारणम् । पराक्रमज्ञः यतस्तस्य पराक्रमं जानाति राजा । प्रियस प्रिया सन्ततिर्यस्य सः । रामे व्यापादिते मा भूत्सन्तानविच्छेद इति प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः ॥ ५१ ॥

तदनुनयमाह—

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।
सङ्क्षिप्य संरम्भमसद्विपक्षं काऽऽस्थाऽर्भकेऽस्मिंस्तव राम रामे

अनेकश इत्यादि—संरम्भं क्रोधं संक्षिप्य उपसंहर । क्षिपेः लोटि म मेकवचने रूपम् । श्यन् । एकमेकमिति विगृह्य । 'सङ्ख्यैकवचनाच्च वीप्सा ।५।४।४३।' इति शस् । पश्चान्नञ्समासः । अनेकशोऽनेकप्रकारमिति क्रि विशेषणमेतत् । निर्जितं पराजितं राजकं राज्ञां समूहो येन स निर्जि शत्रुभूतराजमण्डलः । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्या ।४।२।३९।' इति वुञ् । त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि । कैः—नृ क्ततोयैः । 'तृप प्रीणने ।' इत्यस्माल्लुङ् । सिच् । हलन्तलक्षणा वृद्धि असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे । निर्जितराजकत्वा रामो विपक्ष इति चेदाह—"काऽऽस्थाऽर्भकेऽस्मिंस्तव राम रामे।"इति । हे अर्भके बालके रामे तव का आस्था क आदरोऽस्ति । नैवेत्यभिप्रायः ॥ ५२

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः ।
धनुर्व्यकार्षीद्गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥ ५३

अजीगणदित्यादि—दाशरथं दशरथस्येदं दाशरथम् । 'तस्य

१ शत्रुप्रधानानामिति भावः ।

४।३।२०।' इत्यण्। वाक्यं वचनम्। यदा दर्पेण मदेन हेतुना स जाम-
न्यः नाजीगणत् न गणितवान्। 'गण संख्याने।' इत्यस्यादन्तत्वान्न वृद्धिः।
ङि। ६।१।११।' इति द्विर्वचनम्। 'ई च गणः। ७।४।९७।'
ति अभ्यासस्येकारः। तदा कुमारो रामो धनुर्व्यकार्क्षीत् आकृष्टवान्। 'कृष
ाकर्षणे।' स्पृशमृशेत्यादिनोपसंख्यानेन सिचि पक्षे रूपम्। हलन्तलक्षणा
द्धिः। 'षढोः कः सि। ८।२।४१।' इति कत्वम्। कृतदारकर्मापि
त्रः पितारि जीवति कुमार इति व्यपदिश्यते। गर्भयतीति गर्भः। गुरु-
णो गर्भो यस्य धनुषः। लोकांश्च स्वप्रभावाद्विजितान्। तस्य परशुरामस्य।
लावीत्[1] छिन्नवान्। लुनातेर्लुङि सिचि वृद्धौ रूपम्। समुच्छिद्यन्तामस्या
ोका इति अमोघमस्त्रं मुक्तवानित्यर्थः। ततःप्रभृति तस्य सर्वं तेजोऽपहृतम्।।५३।।

जिते नृपारौ[2] सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम्।
वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमुखानि मार्गान् ॥५४॥

जित इत्यादि—जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः-
गाहिरे अवष्टब्धवन्ति। वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छतेति। जाम-
ग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि। 'अरुर्मन-
क्षुश्चेतोरहोरजसां लोपश्च। ५।४।५१।' इति च्वावन्त्यस्य लोपे 'अस्य
वौ। ७।४।३२।' इतीत्वे रूपम्। शब्दायमानानि। अशनैः सुष्ठु शब्दं
र्वाणानि। एवं जितस्तथा जितो नृपारिरिति। 'शब्दवैरकलहाभ्रकण्वमेघे-
यः करणे। ३।१।१७।' इति क्यङ्। अशङ्कं निर्भयं जगाहिर इति क्रिया-
शेषणम्। अनेकमुखानि पृथग्भूतानि पूर्वं भयेन बहुलीभूतत्वादनीकानां
हुवचनमिति ॥ ५४ ॥

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं
दवयदतिरयेण प्राप्तमुर्वीविभागम्।
क्रमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥

अथेत्यादि—अथेत्यानन्तर्ये। बलं दाशरथम्। तूर्णं शीघ्रम्। 'रुष्यमत्वर-
संघुषाऽऽस्वनाम्। ७।२।२८।' इति पक्षे इडभावः। 'ज्वरत्वरस्रिव्य-

---

१ लूञ् छेदने। २ नृपा अरयः वध्यत्वेन वधकत्वेन च शत्रवः यस्य [illegible]।
रामो हि पूर्वं नृपान् हतवान् सम्प्रति च स्वयं जित इति तथोक्तत्वम्

विभवामुपधायाश्च । ६ । ४ । २० ।' इति वकारोपधयोरूठ् । 'रदाभ्याम् । ८ । २ ४२ । ' इति नत्वम् ।। अयोध्यामायात् आगतम् । आ पूर्वाद्यातेर्लङि रूपम् । पुरुर्महान् वेगो जवः तेन योगात् । पूर्यते वर्धते इति पुरुः । 'कुश्च' इत्यधिकृत्य 'पृभिदिव्यधिगृधिधृषिभ्यः' इति कुप्रत्ययः। दूरसंस्थं दूरे सन्तिष्ठत इति कः । उर्वीविभागम् । नेदयत् अन्तिकं कुर्वन् । अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् । इष्टवद्भावात् 'अन्तिकबाढयोर्नेदसाधौ । ५ । ३·।६३।' इति नेदादेशः पश्चाल्लट् । शतरि शप् । अदेशः । प्राप्तं विषयीकृतं चोर्वीविभागं भूविभागम् । अतिरयेण अतिवेगेन दवयत् दूरीकुर्वत् पश्चाद्भागेन । दूरशब्दात् पूर्ववण्णिचि इष्टवद्भावे च 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । ६ । ४ । १५६ ।' यणादिपरलोपः पूर्वस्य च गुणः । पश्चात्तथा एव लडादयः । क्लमरहितम् गतश्रमम् । अचेतत् कियद्दूरमागतोऽहमित्यबुध्यमानम् । 'चिती संज्ञाने' इत्येतस्य शतरि रूपम् । अनीरजा नीरजाः कारितेति 'अरुर्मनश्चक्षुश्चेतोरजसां लोपश्च । ५ । ४ । ५१ ।' इति च्वावन्त्यलोपः। 'अस्य च्वौ ।७।४।' इतीत्वम् । नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां ताम् । सिक्तसंमृष्टभूमिकामित्यर्थः । उपहितशोभाम् छत्रध्वजपताकाभिरारोपितशोभाम् ॥ ५५ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिकाव्ये प्रथमे प्रकीर्णकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः लक्ष्यरूपे कथानके सीतापरिणयो नाम द्वितीयः सर्गश्च ॥

---

## तृतीयः सर्गः ।

वधेन सङ्ख्ये पिशिताऽशनानां क्षत्राऽन्तकस्याऽभिभवेन चैव ।
आढ्यंभविष्णुर्यशसा कुमारः प्रियंभविष्णुर्न स यस्य नाऽऽसीत्[1] ॥

वधेनेत्यादि–संख्ये संग्रामे पिशिताशनानां राक्षसानाम् । पिशितं मांसम् अशनं येषामिति । तेषां वधेन हननेन । 'हनश्च वधः । ३ । ३ । ७६ ।' अप्प्रत्यये वधादेशः । कृद्योगे कर्मणि षष्ठी । क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च 'ऋदोरप् । ३ । ३।५७ ।' चैवशब्दो निपातसमुदायः समुच्चये । तेन हेतुभूतेन । यशसा आढ्यंभविष्णुः । अनाढ्य आढ्यो भूतः 'कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।' इति खिष्णुच् 'अरुर्द्विषदजन्तस्य

1 अत्र 'मालिनी' वृत्तं तल्लक्षणं चोक्तं प्राक् ।

।६७।' इति सुम्। कुमारो यस्य स प्रियंभविष्णुः। यस्यापि प्राक् प्रियो न
ः पश्चादपि तथैव न प्रियो भूतः स नासीत् न बभूव ॥ १ ॥

**ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः।**
**आघोषयन्भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥ २ ॥**

तत इत्यादि—ततः प्रियम्भविष्णुताया अनन्तरं भूमिपतिर्दशरथो लोकं
नीचकार[1]। किमयं सम्यक् पालयिष्यति न वेति असुचेतसः पौरा भृत्याश्च
ताः ते सम्यक्पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः। भूयो-
। पुनरपि लोकं समस्तं सुमनीचकार। कथमित्याह[2]—राज्ये राजकर्मणि
क्तनलक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकं करिष्यामीति। सिचेःस्मयपदित्वा-
्। अनीचैर्महता ध्वनिना। आघोषयन् घोषणां कारयन्। सुचेतीसुमनीश्च-
 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५।४।५१।' इति साधू ॥ २ ॥

**आदिक्षदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम्।**
**सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥**

आदिक्षदित्यादि—तस्य रामस्य सिंहासनमादिक्षत्[3] आदिष्टवान् एवंविधं
रयेति। दिशेः स्वरितेतो लुङि 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति
ः क्सः। अकर्तृगामिक्रियाफलत्वात्तिप्। आदीप्तकृशानुकल्पं ज्वलिता-
तुल्यम्। तस्य कारणमाह—सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि
सन्। तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि
। सपादपीठं सह पादपीठेन ॥ ३ ॥

**प्रास्थापयत्पूगकृतान्स्वपोषंपुष्टान्प्रयत्नाद्दृढगात्रबन्धान्।**
**सभर्मकुम्भान्पुरुषान्समन्तात् पत्काषिणस्तीर्थजलाऽर्थमाशु ॥ ४ ॥**

प्रास्थेत्यादि—तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण। समन्तात् सर्वासु
क्षु। आशु शीघ्रं प्रास्थापयत् प्राहिणोत्। प्रपूर्वस्तिष्ठतिर्गमने वर्तते। तस्य हेतु-
ण्यन्तस्य लुङि रूपम्। पूगकृतान् अपूगाः पूगाः कृताः इति 'श्रेण्यादिषु
च्व्यर्थवचनम्' इति समासः। संघीकृतानित्यर्थः। स्वपोषं पुष्टान्। 'स्वे पुषः
३।४।४०।' इति णमुल्। 'अमैवाव्ययेन ।२।२।२०।' इति समासः। यथाविध्यनु-
योगश्च। दृढो गात्रबन्धो येषां तान्। संयतकायान्। महाभारोद्वहनक्षम-

१ प्रसन्नं चकार। २ तत एवाह किमयमित्यादि। ३ आङ्पूर्वकस्य 'दिश
अतिसर्जने' इत्यस्य लुङि रूपमिदम्।

स्वात् सभर्मकुम्भान् ससुवर्णकलशान् । पत्काषिणः । पादौ कषितुं ...
शीलं येपामिति । 'सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७७।' 'हिमकाषिहतिषु च ।६।३।५४।' इति पदादेशः । पदातीनित्यर्थः । आश्विति 'कृवापा... स्वदिसाध्यशूभ्य उण्' इत्युणादिकादुण ॥ ४ ॥

उक्षान्प्रचक्रुर्नगरस्य मार्गान् ध्वजान्बबन्धुर्मुमुचुः खधूपान् ।
दिशश्च पुष्पैश्चकरुर्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥

उक्षानित्यादि—ये निपुणा अर्थेपु कार्येपु राज्ञा दशरथेन नियुक्ता आ... कृतास्ते नगरस्य मार्गान् पथः । उक्षान् सेकवतः प्रचक्रुः । उक्षणमुक्षा । 'गुरोश्च हलः ।३।३।१०३।' इत्यकारः । सा विद्यते येपामिति 'अर्शआदिभ्योऽच् ५।२।१२७।' 'इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।' इत्याम्प्रत्यये कुरि... नुप्रयोगो न घटते । 'कृञ्चानुप्रयुज्यते लिटि ।३।१।४०।' इत्यनुशब्दस्य व्यव... तानि वृत्त्यर्थत्वात् । ध्वजान् बबन्धुः उच्छ्रायितवन्तः । मुमुचुः खधूपान् ... घटिकादिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः । दिशश्च पुष्पैश्चकरुः छादितवन्त... 'कृ विक्षेपे ।' इत्यस्य लिटि 'ऋच्छत्यृताम् ।७।४।११।' इति गुणः । विचि... नानाप्रकारैः ॥ ५ ॥

मातामहाऽऽवासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।
तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६

मातेत्यादि—तत्पूर्वोक्तमभिपेकसंविधानं सोढुमशक्नुवाना ... कैकयी केकयस्य देशविशेपस्य, लक्षणया तदीशस्येति यावत् । इयं ... तथोक्ता रामस्य वनप्रयाणं ववार प्रार्थितवती राज्ञ इत्यर्थात् । सहेः ... पदे 'शकधृपज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेपु तुमुन् ।३।४।६५।' ... तुमुन् । तत्र नञा शक्यर्थस्य प्रतिपेधेऽपि न दोपः प्रतिपेधस्य बहिरङ्गत्वा... शक्नोतेः परस्मैपदित्वात् शानज् नास्ति । 'ताच्छील्यवयोवचनशक्तिषु चानश् ।३।२।१२९।' इति चानश् । स्वादित्वात् श्नुः । 'अचि श्नुधातुभ्रुवां य्वो... रियङुवङौ ।६।४।७७।' इत्युवङ् । किं कृत्वेत्याह—तदानीं प्रा... नाकाले देशान्तरावस्थितत्वात् किमेवं क्रियते न वेति न भर... पृष्टवती । देशान्तरावस्थितिं दर्शयन्नाह—मातामहावासमिति

---

१ अश्वादियानसाहाय्यमन्तरेण गमने चरणपीडावहत्वमिति यथाक्रम् ।

ःु: पिता मातामहः । 'पितृव्यमातुलमातामहपितामहाः ।४।२।३६।' इति
ातनात् डामहच् । आवासः निलयम्।आवसत्यस्मिन्निति अधिकरणे घञ् ।
ियिवांसम्।'उपेयिवाननाश्वाननूचानश्च।३।२।१०९'इति निपातितः।मोहादज्ञा-
। दूतप्रेषणेनापृष्ट्वा।रामस्येति कर्तरि षष्ठी।वनाय प्रयाणं गमनमिति चतुर्थीति
विभागात् समासः । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि
३।१२।' इति चतुर्थी । परत्वात्कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न ।
द्वितीयाग्रहणात्परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति । यद्येवं
ैव स्यात् न चतुर्थी । नैष दोषः । द्वितीयाग्रहणस्योपलक्षणार्थत्वात् ।
च वृत्तावुभयमुक्तं—ग्रामं गन्ता ग्रामाय गन्तेति ॥ ६ ॥

र्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना ।
ामप्रवासे व्यमृशन्न दोषं जनाऽपवादं सनरेन्द्रमृत्युम् ॥ ७ ॥

र्णेइत्यादि—कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः । 'स्तम्ब-
ो रामजपोः ।३।२।१३।' इत्यच् । 'तत्पुरुषे कृति बहुलम् ।६।३।१४।'
सप्तम्या अलुक् । तैराहितः आनायितो राज्यलोभो यस्याः सैवम् । स्त्रैणेन
अयम् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । ४। १ । ८७ ।' इति नञ् ।
वो लघिमा 'पृथ्वादिभ्य इमनिज्वा । ५ । १ । १२२ ।' इतीमनिच् ।
पः । तेन विकृतिमन्यथात्वं नीता केकयी रामप्रवासे सति दोषं न व्यमृ-
नालोचितवती । 'मृश आमर्शने ।' इति तौदादिकस्य लङि रूपम् ।
रूपं दोषम्—जनापवादं लोकवैमुख्यम् । राज्यार्हो ज्येष्ठः पुत्रोऽनया
जेत इति । नरेन्द्रस्य दशरथस्य मृत्युना सह वर्तमानम् ॥ ७ ॥

सूनि देशांश्च निवर्तयिष्यन् रामं नृपः संगिरमाण एव ।
तयाऽवजज्ञे भरताऽभिषेको विषादशङ्कश्च मतौ निचख्ने ॥ ८ ॥

सूनीत्यादि—रामं निवर्तयिष्यन् रामं निवर्तयितुं वसूनि द्रव्याणि देशां-
ङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीक-
वजज्ञे अवज्ञातः । ज्ञा इत्ययं धातुरवपूर्वोऽवज्ञाने वर्तते । तस्मात्कर्मणि
। 'गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ।' इत्युपधा-
: । तत्र वृतेर्हेतुमण्ण्यन्तात् क्रियार्थोपपदे लट् । सङ्गिरणं च क्रिया ।
तौदादिकात् 'अवाद्ग्रः।१।३।५१।' इति अधिकृत्य 'समः प्रतिज्ञाने ।१।३।५।
' इति तङ् । शानच् । 'ऋत उत् । ७ । १ । १०० ।' 'आने मुक् ।७।२।२८।'

अत्र परिकरः । २ अत्र समासपुनरात्तत्वमिति तृतीयचतुर्थपादौ व्यत्ययेन
ोयौ ।

इदं चापरमनुष्ठितं तथा: भरतो राज्येऽभिषिच्यतामिति भरताभिषेको म
मनसि निचख्ने निखातः । कर्मणि लिट् । 'गहमनजनखनघसां लोपः क्ङित्यन
।६।४।९८। इत्युपधालोपः।तथा विषादः शंकुरिव शल्यमिव निचख्ने । अ
त्वात् नायं समभिषिच्यत इति विषादः । संग्रामात्किल परिश्रान्तमागतं द
रथं केकयी परिचचार तेन परितुष्टेनोक्तं किं ते दास्यामीति । सा प्राह यद
यिष्यते तदा यूयं दास्यथेति सा तदवसरं बुद्ध्वा वरद्वयं प्रार्थितवती । प
रामस्य वनगमनं द्वितीयो राज्ये भरतोऽभिषिच्यतामिति ॥ ८ ॥

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय ।
सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९

तत इत्यादि—केकयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राजयिषुः प्र
न्तमेनं प्रव्राजयितुमिच्छुः व्रजेर्हेतुमण्ण्यन्तात्सन् । अस्य कुमारस्य । रथेन व
भिगममभिगमनम् । 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप् । अ
क्षत् आदिष्टवान् । अस्येति कर्तरि षष्ठी । वनायेति । 'गत्यर्थकर्मणि द्विती
चतुर्थ्यौ चेष्टायामनध्वनि- ।२।३।१२।' इति चतुर्थी । सौमित्रिसी
नुचरस्य लक्ष्मणसीतासहायस्य। सुमित्राया अपत्यम् । बाह्वादित्वादिञ् । स
रत्वेनाभ्यर्हितत्वात् पूर्वनिपातः । अनु पश्चाच्चरतीति अनुचरः 'भिक्षासेन
येषु च ।३।२।१७।' इति चकारस्यानुक्तसमुच्चयार्थत्वात् टः । अनुचर
नुचरी च । 'पुमान् स्त्रिया ।१।२।६७।' तावनुचरौ सौमित्रिसीते अनु
सहायौ यस्य । कालापिकास्ततोऽन्यत्रापि पठान्ति अधिकरणोपपदे 'चरेष्टः'
र्थः । नीयतेऽनेनेति नेत्रं लोचनम् । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपत
नहः करणे ।३।२।१८२।'इति ष्ट्रन् । सुमन्त्रनामा रथवाहको नेत्रमिव
रथस्य तद्वशात्तस्य प्रवृत्तेः । शोचन् परिदेवयमानो राजा ॥ ९ ॥

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्रमुच्चैः ।
ऊचुस्तथाऽन्ये भरतस्य मायां धिक्कैकयीमित्यपरो जगाद ॥ १

केचिदित्यादि—राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपं निनि
कुत्सितवन्तः । 'णिदि कुत्सायाम् ।' अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम् । के
केचित्साश्रं सबाष्पमुच्चैः सुष्टु विचुक्रुशुः सुतरामाक्रन्दितवन्तः । तथान्ये
तस्य मायां शाठ्यमूचुः उक्तवन्तः । तत्कृतोऽयं प्रयोगो येनात्मरक्षार्थं म
महनिवासे स्थित इति । अपरो धिक्कैकयीं ययेदमनुष्ठितामिति जगाद गदित
'धिगुपर्यादिषु त्रिषु' इति धिग्योगे द्वितीया ॥ १० ॥

१ अत्र 'तुल्ययोगिता' ।

गतो वनं श्वो भवितेति रामः शोकेन देहे जनताऽतिमात्रम् ।
धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमाराऽनुगमे मनांसि ॥११॥

गत इत्यादि—श्व आगामिनि दिवसे वनं गतो रामो भवितेति तास् । नता जनसमूहः । 'ग्रामजनबन्धुभ्यस्तल् ।४।२।४३।' इति तल् । देहे दग्धा । र्मणि लिट् । 'अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।'इत्येत्वाभ्यासलोपौ । त इति भूतकालः श्वो भवितेति भविष्यत्कालेन सम्बध्यमानः साधुः । 'धातु-म्बन्धे प्रत्ययाः ।३।४।१।' इति । ये तु तत्र धीराः ते च्युतमन्यवो विगत-ोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृत-न्वः । राममनुव्रजाम इति । निमित्तात्कर्मसंयोगे सप्तमीति । मनांसीति कर्मणा ोगात् ॥ ११ ॥

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।
किं शोचतेहाभ्युदये बताऽस्मान् नियोगलाभेन पितुः कृताऽर्थान्१२

प्रस्थेत्यादि—ता रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ । 'समवप्रविभ्यः थः ।१।३।२२।' इति तङ् । जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ । ब्रुवी-प्रर्थग्रहणान् वचेर्द्विकर्मकता । उपसेदुषस्तौ ढौकितवतः जनान् । 'भाषायां सद्-सश्रुवः ।३।२।१०८।'इति क्वसुः । शोशुच्यमानान् अत्यर्थं शोकं कुर्वतः । भृशार्थे ङ् । किमूचतुरित्याह—किं शोचतेति । हे जनाः ! कस्मादस्मान् शोचत परि-देवयध्वम् । विधावपूर्वार्थप्रकाशने लोट् । इहाभ्युदये बतशब्दो विस्मये । स्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम् । कुत इत्याह—पितुर्नियोगला-भेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् । कृतार्थत्वादशोच्या वय-मित्यर्थः ॥ १२ ॥

असृष्ट यो यश्च भयेष्वरक्षीद् यः सर्वदाऽस्मानपुषत्स्वपोषम् ।
महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः ॥१३॥

असृष्टेत्यादि—असृष्ट जनितवान् । सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम् । न तौदादिकस्य परस्मैपदित्वात् 'सृजिदृशोर्झल्यमकिति ।६।१।५८।' इत्यम् । यश्च भयेषु सत्सु अरक्षीत् पालितवान् । 'रक्ष पालने' इत्यस्य लुङि रूपम् । यः सर्वदा सर्वकालम् । 'सर्वैकान्यकिंयत्तदः काले दा ।५।३।१५।' इति दाप्रत्ययः । यश्चापुषत् पुष्टवान् । स्वपोषं धनेनास्मानपुषत् । पुषेर्लुङि रूपम् । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।३।१।५५।' इत्यङ् । 'स्वे पुषः । ३ ।४ ।४० ।'

---

१ च्युतशोकत्वे धीरत्वं हेतुः ।

इति णमुल्। 'अमैवाव्ययेन ।२।२।२०।' इति समासः । 'यथाविध्यनुप्रयोग-। ३ । ४।४।' तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति मोक्षः प्रत्युपकारो नैवेति भावः। केनेत्याह—तुच्छेन असारेण वनस्य यातेन । यातेर्भावे ल्युट्। वनस्येति शेषसामान्ये षष्ठी। कृल्लक्षणायास्तु षष्ठ्या गत्यर्थकर्मणि चतुर्थ्या वाध्यमानत्वात् ॥ १३ ॥

विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोर्ध्वशोषं तृणवद्विशुष्कः ।
अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥१४॥

विद्युदित्यादि—अर्थे कार्यविशेषे दुरापेऽपि कृच्छ्रप्राप्येऽपि । 'ईषद्दुःसुपु-३।३।१२६।' इति खल्। गुरूणां यच्छासनमादेशः तस्मिन् यो नावास्थित नावस्थितवान्। अवपूर्वात्तिष्ठतेर्लुङ् । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति त 'स्थाघ्वोरिच्च ।१।२।१७।' इति कित्त्वमित्त्वं च । 'ह्रस्वादङ्गात् ।८।२।२७।' इ सिचो लोपः। स वरं विद्युत्प्रणाशं प्रनष्टः। विद्युदिवोत्पत्त्यनन्तरमेव विना गतः। 'उपमाने कर्मणि च ।३।४।४५।' इति चकारात् 'कर्त्रोर्जीवपुरुषयो-३।४।४३।' इत्यतः कर्तृग्रहणानुवृत्तौ कर्तृवाचिनि विद्युच्छब्द उपपदे णमुल् 'उपसर्गादसमासेऽपि णोपदेशस्य।८।४।१४' इति णत्वम्। यद्वेत्यथवा। स ऊर्ध्वशोषं तृणवद्विशुष्कः। 'ऊर्ध्वे शुषिपूरोः ।३।४।४४।' इति णमुल्। उभयत्रामै त्यादिना समासः। 'यथाविध्यनुप्रयोग-। ३ । ४ । ४ ।' किमु प्रवासे किम्पुन प्रवासविषये यच्छासनं तत्र तावदनवास्थितस्य सुतरामेव पूर्वोक्तं प्रयुज्यते॥१४

पौरा निवर्त्तध्वमिति न्यगादीत् तातस्य शोकाऽपनुदा भवेत ।
मा दर्शताऽन्यं भरतं च मत्तो निवर्तयेत्याह रथं स्म सूतम् ॥१५॥

पौरा इत्यादि—हे पौराः! यथागतं निवर्तध्वम्। विधौ लोट्। इति ता न्यगादीत् उक्तवान् रामः। गदेः 'अतो हलादेर्लघोः ।७।२।७।'इति वृद्धिः। 'इ इटि ।८।२।२८।' इति सिचो लोपः। तातस्य पितुः। शोकापनुदाः शोकस्याप हर्तारो भवेत। तुन्दशोकयोरित्यादिना कः। भवतेर्विधौ प्रार्थनायां वा लिङ्। मध्यमपुरुषबहुवचनम् । भरतं च मत्तो मत्तः सकाशात् । 'अस्मदः पञ्चम्यास्तसिल् ।५।३।७।' 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति मदादेशः। अन्यं भरतं मा दर्शत मा द्रष्टारः स्थ। अपि तु योऽहं स एव भरत इति भावः। स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् । दृशेर्माङि लुङ्। 'इरितो वा ।३।१।५७।' इत्यङ् । 'ऋदृशोऽङि गुणः ।७।४।१६।'

१ मत्त इति शेषः ।

वर्तय रथमिति सूतं च सुमन्त्रमाह स्म । 'लट् स्मे ।३।२।११८।' इति लट् । ब्रुवः पञ्चानामादित आहो ब्रुवः।३।४।८४।' इत्याहादेशः तिपो णल् ॥ १५॥

ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः ।
रक्षन्वनेवासकृताद्भयात्तान् प्रातश्छलेनाऽपजगाम रामः ॥ १६ ॥

ज्ञात्वेत्यादि—निवर्तध्वमित्युक्ते ये तत्रानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा । 'गत्वरश्च ।३।२।१६४।' इति निपातितः । तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः । इङ्गतेर्भावे निष्ठा । वनेवास इति सप्तमीति योगविभागात् समासः । 'शयवासवासिषु–६ ।३।१८।' इति विभाषासप्तम्या अलुक् । तेन कृतात्सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां न तु ततोऽधिकां रजनीं शयित्वा । एकरात्रिपर्यन्तमेव तैः सममेकत्र सुप्त्वेत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे २।३।५।' इति द्वितीया । शयित्वेति न क्त्वा सेट् ।१।२।१८।' इति । कित्त्वप्रतिषेधात् गुणो भवति । प्रातः प्रातःकाले । छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान् ॥ १६ ॥

अस्राक्षुरस्रं करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः॥ १७॥

अस्राक्षुरित्यादि—ते पौरा राममपश्यन्तः । करुणं रुवन्तो विलपन्तः । 'रु शब्दे ।' इत्यस्य शतरि रूपम् । अस्रम् अश्रु । अस्राक्षुः मुक्तवन्तः । सृजेस्तौदादिकस्य परस्मैपदिनः सिचि 'सृजिदृशोर्झल्यमकिति ।६।१।६८।' इत्यम् । हलन्तलक्षणा वृद्धिः । 'चोः कुः ।८।२।३०।' 'खरि च ।८।४।५५।' इति कत्वम् । मुहुर्मुहुः भूयोभूयः कवोष्णमीषदुष्णमन्तःसन्तापात् । 'कवं चोष्णे ६।३।१०७।' इति कोः कवादेशः । न्यश्वासिषुः । श्वसेर्लुङ् । ' । हयन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति श्वसेर्वृद्धिप्रतिषेधः । 'अतो हलादेर्लघोः ।७।२।७।' इति विकल्पस्य प्राप्तत्वात् । हा राम हा कष्टं कृच्छ्रमिति ब्रुवन्तः । पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्थंभूतैः । न्यवृतन् निवृत्तवन्तः । 'द्युद्भ्यो लुङि ।१।३।९१।' । इति परस्मैपदविकल्पात् । द्युतादित्वादङ् ॥ १७ ॥

सूतोऽपि गङ्गासलिलैः पवित्वा सहाऽश्वमात्मानमनल्पमन्युः ।
ससीतयो राघवयोरधीयन् श्वसन्कदुष्णं पुरमाविवेश ॥ १८ ॥

१ 'रक्तरूपमश्रु' इति तु ध्वन्यते । अश्रुशोणितोभयवाचित्वात् । 'अस्रः कोणे कचे

सूत इत्यादि—सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह । अनल्पमन्युः प्रवृ शोकः । राघवयोः रामलक्ष्मणयोः । 'सरूपाणामेकशेष एकविभक्तौ । १।२ ६४।' इत्येकशेषः । ससीतयोः सीतासहितयोः । अधीयन् स्मरन् । ' स्मरणे ' इत्यस्य शतरि रूपम् । यणादेशः । 'अधीगर्थदयेशां कर्म्मणि ३।५२।' इति कर्मणि षष्ठी । श्वसन् । कदुष्णं ईषदुष्णम् । 'कवं चोष्णे । ६ ३।१०७।' इति चकारात् कदादेशः । गङ्गातटात्प्रतिनिवृत्त्य पुरमयोध्यामाजग आगतवान् । गङ्गासलिलैः आत्मानं बाह्यमाभ्यन्तरं च पवित्रीकृत्य । 'पूङ ७।२।५१।' इति विकल्पेनेट् । 'पूङः क्त्वा च ।१।२।२२।' इति कित्त्वप्र षेधात् गुणः ॥ १८ ॥

प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव ।
राजन्यनक्षत्रसमन्विताऽपि शोकाऽन्धकारक्षतसर्वचेष्टा ॥ १९ ॥

प्रतीयेत्यादि—जनेन रामानुयायिना प्रतीय प्रतिनिवृत्त्य । पूरयोध्या ददृ दृष्टा । कर्मणि लिट् । प्रतीय इति ईङ् गतावित्यस्य रूपं न पुनरिणः । तस्य तुकि प्रतीत्येति स्यात् ।'षत्वतुकोरसिद्धः ।६।१।८६।'इत्येकादेशस्यासिद्धत्वा 'प्रतीयुषा सा ददृशे' इति पाठान्तरम् । प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थ अस्मिन् पाठे तु 'उपेयिवाननाश्वाननूचानश्च । ३।२।१०९।' इतीणः क्व रूपं द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात् । शोकोऽन्धकार इव शोकान्धकारः । क्षता नीतानुष्ठेयकर्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता । राज्ञोऽपत्या 'राजश्वशुराद्यत् ।४।१।१३७।' राजन्याः क्षत्रियाः । 'ये चाभावकर्मणोः ।' ४।१६८।' इति प्रकृतिभावः । राजन्याः नक्षत्राणीव तैः समन्वितापि द्यौ भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीय राघवयोर्विरहात् ॥ १९ ॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपतिश्च्युताऽशः ।
मवृनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥ २० ॥

विलोक्येत्यादि—रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथ सत्त्वात् स्वभावादच्योष्ट च्युतः । च्यवतेरकर्मकाल्लुङ् । गतोऽपि मद्वचनम तिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः

१ तत्रात्मानं स्वयन्तारम् । वनात् निवृत्तमिति शेषः ।

सत्वात् च्युतश्च मधूनि पातुं नैषीत् नेष्टवान् । 'नेटि । ७ । २ । ४ ।' इति सिचि वृद्धिप्रतिषेधः । गन्धैश्चन्दनादिभिर्नालिपत् । लिपेः 'लिपिसिचिह्वश्च । ३ । १ । ५३ ।' इत्यङ् । मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहितवान् । 'वस आच्छादने ।' इत्यस्मात् लुङ् । अनुदात्तेत्त्वात्तङ् ॥ २० ॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताऽकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः शोकाग्निनाऽगाद्द्युनिवासभूयम् ॥२१॥

आसिष्टेत्यादि—एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः । 'आस उपवेशने' इत्यत आत्मनेपदिनो लुङ् । कृतानि चाकृतानि चेति । 'क्तेन नञ्विशिष्टेनानञ् । २ । १।६०।' इति समासः । असमापितेभ्य इत्यर्थः । क्षितिपालं भजन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः । व्यरंसीत् विरतः । विमुखोऽभूदित्यर्थः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति अपादानसंज्ञा । रमेर्लुङ् ।'व्याङ्परिभ्यो रमः । १ । ३ । ८३ ।' इति तिप् । 'यमरमनमातां सक्च ।७।२।७३।' इति सगिटौ । स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयं देवत्वमगात् गतवान् । दिहेर्निष्ठायां 'दादेर्धातोर्घः ।८।२।३२।' इति घः ।'झषस्तथोर्धो धः । ८ । २ । ४० ।' 'झलां जश् झशि । ८ । ४ । ५३ ।' इति जश्त्वम् । दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति 'भुवो भावे ३ । १ । १०७ ।' इति क्यप् ॥ २१ ॥

विचुक्रुशुर्भूमिपतेर्महिष्यः केशाँल्लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥

विचुक्रुशुरित्यादि—भूमिपतेः राज्ञो महिष्यः पत्न्यः । 'अविमह्योष्टिषच्' इत्यौणादिकष्टिषच् । विचुक्रुशुः रुदितवत्य इत्यर्थः । हा स्वामिन्निति । तथा केशान् लुलुञ्चुः उत्पाटितवत्यः । स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्यः । विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः । क्षमायां भुवि पेतुः । वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः । एते लिडन्ताः । पतेरेत्वाभ्यासलोपौ ॥ २२ ॥

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले ।
दूतांश्च राजाऽऽत्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः ॥२३॥

---

१ अत्र राज्ञो दशरथस्य स्वर्गं प्रति प्रयाणमुक्तम् । २ अत्र बहुवचनेन लोकानुगतिकन्यायेन कैकय्या अपि तथा प्रवृत्तौ ग्रहणम् । ३ अत्र स्वभावोक्तिस्तुल्ययोगिता समुच्चयश्च ।

ता इत्यादि—बन्धुता बन्धुसमूहः । 'ग्रामजनबन्धुभ्यस्तल् । ४ । २ । ४३ ।' ता महिषीः सान्त्वयन्ती तूष्णीं स्थापयन्ती । सान्त्वं करोति णिच् । तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती । आशु शीघ्रम् । मां भूत् इति । क्षिपेर्लुङ् । 'पुषादिद्युताद्यॢदितः परस्मैपदेषु । ३ । १ । ५५ इत्यङ् । कस्मात्तमक्षिपदित्याह—भरतप्रतीक्षा तेन संस्कारः कर्तव्य इति भरतं प्रतीक्षते । 'ईक्षिक्षमिभ्यां च ।' इत्युपसंख्यानाण्णः । दूतान् प्रास्थापय प्रहितवती । राजात्मजं भरतमानिनीषून् आनेतुमिच्छून् । अन्यथा केकयीं मुख्याद्भरतेऽपि वैमुख्याद्दूता अपि नानेतुमिच्छन्ति । तत्रापि मन्त्रिमतेन स्वमतेन । यूनः तेषां गन्तुं समर्थत्वात् ॥ २३ ॥

सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधः स्फुरन्तम् ।
आख्यद्वसन्मातृकुले सखिभ्यः पश्यन्प्रमादं भरतोऽपि राज्ञः ॥२४

सुप्त इत्यादि—भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्य कथितवान् । ख्यातेर्लुङ् । 'अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ ।५२।' इत्यङ् क्रियाग्रहणं कर्तव्यमिति संप्रदानसंज्ञायां चतुर्थी । किमाख्यदित्याह–अ सुप्तः सन् नभस्तो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुर चलन्तं निरीक्षांचक्रे निरीक्षितवान् । ईक्षेः 'इजादेश्च गुरुमतोऽनृच्छः।३।१।३६' इत्याम् । उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपान् परोक्षे लिट् । पश् विलोकयन् । राज्ञो दशरथस्य । प्रमादमनिष्टम् ॥ २४ ॥

अशिश्रवन्नात्ययिकं तमेत्य दूता यदाऽर्थं प्रयियासयन्तः ।
आंहिष्ट जाताऽङ्घ्रिहिपस्तदाऽसावुत्कण्ठमानो भरतो गुरूणाम् २५

अशीत्यादि–दूता एत्य आगत्य भरतमातृकुलमित्यर्थः । अङ्पूर्वादिणः क्त्वा प्रत्ययस्य ल्यपि तुकि च रूपम् । यदा तं भरतमर्थं वचनमशिश्रवन् श्रावितवन्त अर्थ्यतेऽनेनेति णिच् घञ् । शृणोतेर्ण्यन्तात्लुङि 'चङि ।६।१।११।' इति द्विर्व नम् । 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१।' इत्यभ्यास त्वम् । आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमि ठञ् । पिता ते ग्लानस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनम् । तम् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता सणौ ।१।४।५२।' इ कर्मसंज्ञा । शृणोतेः शब्दकर्मत्वात् अर्थमिति 'कर्तुरीप्सिततमं कर्म्म ।१।४।४९' इत्यनेन कर्म्म । प्रयियासयन्तः प्रयातुमिच्छन्तं भरतं प्रयोजितवन्तः सन्नन्तण्यन्तोऽयम् । तदा असौ भरतो जाताङ्घ्रिहिपः । जाता अङ्घ्रि

ामनेच्छा यस्य सः। 'आहि गतौ।' 'इदितो नुम् धातोः।७।१।५८।' तस्मादंहितुमिच्छतीति सन्। इट्। 'अजादेर्द्वितीयस्य ।६।१।२।' इति हिशब्दो द्विरुच्यते। नकारस्य 'न न्द्राः संयोगादयः।६।१।३।' इति प्रतिषेधः। अभ्यासकार्यम्। अनुस्वारपरसवर्णौ। 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारप्रत्ययः।टाप्।आंहिष्ट गतवान्।तस्मादेवात्मनेपदिनो लुङ्। उत्कण्ठमानः स्मरन्। 'मठि कठि शोके।' इत्यस्मादात्मनेपदिनो रूपम्। अनेकार्थत्वाद्धातूनाम्। गुरूणां पितामहादीनाम्। 'अधीगर्थदयेशां कर्म्मणि।२।३।५२।' इति कर्मणि षष्ठी ॥ २५ ॥

बन्धूनशङ्किष्ट समाकुलत्वा-दासेदुषः स्नेहवशादपायम्।
गोमायुसारङ्गगणाश्च सम्यङ्नाऽयासिषुर्भीममरासिषुश्च ॥ २६ ॥

बन्धूनित्यादि—दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः। शङ्कतेरात्मनेपदिनो लुङि रूपम्। कीदृशान् आसेदुषः अपायं विनाशं गतवतः। 'भाषायां सदवसश्रुवः।३।२।१०८।' इति क्वसुः। 'अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।' इत्येत्वाभ्यासलोपौ। अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति। गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालमृगगणाश्च सम्यगनुकूलं नायासिषुः नागताः। यातेर्लुङि 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ। शृगालाः प्रदक्षिणं गताः मृगाश्च सव्यामित्यर्थः। भीममुद्वेगकरमरासिषुः रसिताः। रसेः परस्मैपदिनो लुङि। 'अतो हलादेर्लघोः।७।२।७।' इति वृद्धौ रूपम्। न रासेः। तस्यात्मनेपदित्वात् ॥ २६ ॥

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यम्।
आकर्णयामास न वेदनादान् न चोपलेभे वणिजां पणाऽयान् ॥२७॥

स इत्यादि—स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन्। 'भाषायां-।३।२।१०८।' इति क्वसुः। यजादित्वात् सम्प्रसारणं द्विर्वचनम्। 'वस्वेकाजाद्घसाम् ।७।२।६७।' इति इट्। पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरं प्रविष्टः।घोषं शब्दं न शुश्राव न श्रुतवान्।जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यम्। 'जनेर्यक्' इति जनेर्यक्। तथा वेदध्वनीन्नाकर्णयामास न श्रुतवान्। 'प्रातिपदिकाद्धात्वर्थे' इति णिच्। तदन्तात् लिट्याम्। 'अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५।' इत्ययादेशः। न चोपलेभे नोपलब्धवान्। वणिजां पण्यजीविनाम्। पणायान् पणलाभान्। क्रयविक्र

रूपव्यवहारस्योच्छिन्नत्वात् । पणन्ते इति वणिजः पणेरिजादेश्च व इत्यौणादिकः । पण्यन्त इति पणाः । 'नित्यं पणः परिमाणे ।३।३।६६।' इत्यप् व्यवहर्तव्याः ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाः । 'एरच् ।३।३।५६। इति इणः कर्मणि अच् । पणानामयाः पणायाः तान् । पणायामि पाठान्तरम् । वणिजां स्तुतिं संव्यवहारविषयां नोपलेभे । संव्यवहारकुशल साधव इति गुपादिपु स्तुत्यर्थपणिना साहचर्यात् पणेरपि तदर्थादेवायप्रत्ययः 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारः । टाप् । 'वणिजां प्रलापान्'इति तृतीय पाठः । वणिक्प्रसारकलहानित्यर्थः ॥ २७ ॥

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागताऽस्राः ।
पुरोहिताऽमात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्याः ॥२८॥

चक्रन्दुरित्यादि—तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः । हा स्वामिन् ! हा राजन् ! क्व गतोऽसीति । उपागतं प्राप्तमस्रमश्रुजलं यासां ताः । एवंविधाः । युध्यन्त इति योधाः पचादित्वादच् । ते च तं समेत्य नृपतिं चक्रन्दुः । पुरो धीयत इति पुरोहितः । 'निष्ठा ।३।२।१०२।' 'दधातेर्हिः ।७।४।४२।' अमाशब्दः सहार्थे । सह राज्ञा कार्येषु भवतीत्यमात्यः । 'अमेहक्कतसित्रेभ्य एव ।'इति नियमात् । पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः । विवृद्ध मन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥ २८ ॥

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणं च ।
रोरुयमानः स तदाऽभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥

दिदृक्षमाण इत्यादि—स भरतो यदा ससीतं रामं लक्ष्मणं च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन् । 'ज्ञाश्रुस्मृदृशां सनः ।१।३।५७। इति तङ् । 'हलन्ताच्च ।१।२।१०।' इति सनः कित्त्वे 'सृजिदृशोः– ।६।१।५८।' इत्यम् न भवति । नैक्षत न दृष्टवान् । तदा रोरुयमाणः अत्यर्थं रुदन् । यङि रूपम् । अभ्यपृच्छत् पृष्टवान् । ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् । अन्यथा कवेः परोक्षत्वात् लिट् स्यात् । अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुख्या अस्मै भरताय । ख्यातेः 'अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।' इति च्लेरङ् । आतो लोपः ॥२९॥

**आबद्धभीमभ्रुकुटीविभङ्गः शेश्वीयमानाऽरुणरौद्रनेत्रः ।**
**उच्चैरुपालब्ध स केकयीं च शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥३०॥**

आबद्धेत्यादि—स भरत उच्चैर्महता ध्वनिना केकयीं च मुहुर्मुहुर्भूयो भूय
गालब्ध उपालब्धवान् । उपाङ्पूर्वो लभिरुपालम्भे वर्तते । तस्मादात्मनेपदिनो
ालो झलि ।८।२।२६।' इति सिज्लोपे धत्वजश्त्वे रूपम् । शोके च मन्यौ
विरतमजस्रं न्यमाङ्क्षीत् निमग्नः । मस्जेर्लुङि 'मस्जिनशोर्झलि ।७।१।६०।'
ते नुम् । तत्रापि मस्जेरन्त्यादिनियमात् नुम् । संयोगादिलोपः । हलन्तल-
णा वृद्धिः । हल्ग्रहणं समुदायप्रतिप्रत्त्यर्थमित्युक्तम् । कीदृशः । आबद्धभीम-
्रुकुटीविभङ्गः । भ्रमेश्च डुरित्यौणादिको डुः । 'कुडे स्त्रीलिङ्गे भावे कृशादिभ्यः'
ीः । तदन्तात् कृदिकारादिति ङीष् । भ्रुवोः कुटी कौटिल्यं भ्रुकुटी । 'इको
स्वोऽङ्यो गालवस्य ।६।३।६१।' इति ह्रस्वः । तस्या विभङ्गो विरचनम् ।
ाबद्धः कृतः प्रयत्नेनायासवृत्तेन भीमो भयानको भ्रुकुटीविभङ्गो येन यस्य
ति । शेश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य
ः । श्वयतेर्यङि 'विभाषा श्वेः ।६।१।३०।' इति वा सम्प्रसारणम् ॥३०॥

तमुपालम्भमाह—

**नृपाऽऽत्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः ।**
**शोच्या वयं भूरनृपा लघुत्वं केकय्युपज्ञं बत बह्वनर्थम् ॥ ३१ ॥**

नृपेत्यादि—नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः
क्लिष्टौ । ममार मृतो राजा । 'म्रियतेर्लुङ्लिङोश्च ।१।३।६१।' इति नियमात्त-
नेऽभावः । विधवाः धवो भर्ता तेन विना भवत्यो जाताः । शोच्याः शोच-
ीया वयम् अयशोभाजनत्वात् । 'ऋहलोर्ण्यत्।३।१।१२४।''शङ्क्याः' इति पाठा-
तरम् । शङ्कनीया वयम् । एतत्कृतोऽयं प्रयोग इति । भूश्चानृपा । न विद्यते नृपो
स्यामिति । नञोऽस्त्यर्थनामिति बहुव्रीहिः । लघुत्वं राज्यप्रार्थनालक्षणं
केकय्युपज्ञम् । केकय्याः प्रथमतो ज्ञातं नान्यस्य कस्यचित्पूर्वज्ञातम् । उपज्ञायत
इत्युपज्ञम् 'आतश्चोपसर्गे ।३।१।१३६।' इति स्त्रियामङ् । कृल्लक्षणा षष्ठी केकय्या
उपज्ञेति समासः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।२।४।२१।' इति नपुंस-
कता । बत कष्टम् । बह्वनर्थं बहुदोषम् । क्लेशमरणाद्यनिष्टानां सम्भवात् ॥३१॥

भरतकृत एवायं प्रयोग इत्येतत्परिहरन्नाह—

---

१ अश्लीलोऽपि प्रयोगोऽत्रादुष्टः । प्रकृते तथोक्तौ शोकोद्गारकत्वात् ।

नैतन्मतं मत्कमिति ब्रुवाणः सहस्रशोऽसौ शपथानशप्यत् ।
उद्वाशयमानः पितरं सरामं लुठन्सशोको भुवि रोरुदावान् ॥ ३२

नैतदित्यादि—यदेतत्कैकय्यनुष्ठितं मतमभिप्रायः । न मत्कृतं तत् । नाह
स्य ग्रामणीर्नं प्रभुरिति । अस्मच्छब्दात् 'स एषां ग्रामणीः ।५।२७८।' इ
कन् । 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति मपर्यन्तस्य मादेशः । नास्मन्म
दनुष्ठितमनयेत्यर्थः । इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथा
सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् । अनेकार्थत्वाद्धातूनां शपेर्दैवादि
कस्य उभयपदिनो लङि रूपम् । उद्वाशयमानः आह्वयन् । 'वाशृ शब्दे ।' दै
दिकः । अनुदात्तेत् । पितरं सरामं हा तात ! हा रामेति । लुठयन् भुवि लुठन
'लुठ विलोडने ।' दैवादिकः परस्मैपदी । सशोक इति शाठ्यपरिहारार्थम्
रोरुदावान् अत्यर्थं रोदनं कुर्वन् । यङन्तात् 'अ प्रत्ययात् ।३।३।१०२।' इत्यका
'अतो लोपः ।६।४।४८।' 'यस्य हलः ।६।४।४९।' स्त्रियामतष्टाप् । सा वि
यस्येति मतुप् ॥ ३२ ॥

तं सुस्थयन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूहुरारात् ।
अन्त्याऽऽहुतिं हावयितुं सविप्राश्चिचीपयन्तोऽध्वरपात्रजातम् ॥ ३३

तमित्यादि—सचिवा अमात्याः । कार्येषु सचन्ते समवयन्तीति सचेरि
न्नित्यौणादिक इवन् । तं भरतं सुस्थयन्तः सुस्थं कुर्वाणाः । तत्करोति
णिच् । नरेन्द्रं दशरथम् । समुदूहुः उद्वाहितवन्तः । शिबिकायामारोप्य । ब
न्तर्भावितण्यर्थोऽत्र द्रष्टव्यः । यजादित्वात्सम्प्रसारणम् । आरात् नातिदूरे
दिधक्षयन्तः । दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः । दहेः सनि 'दादेर्धातो
।८।२।३२।' भष्भावश्चर्त्वे । प्रयोजकव्यापारे णिच् । अन्ते विनाशे भवा
आहुतिः । 'दिगादिभ्यो यत् ।४।३।५४।' इति यत् । तामन्त्याहुतिं हावयि
मग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीपयन्तः । च
निधातुमिच्छन्तः प्रयोजितवन्तः । किं तत् अध्वरपात्रजातं यज्ञोपयोगिपात्रा
स्रुवादीनां समूहम् ॥ ३३ ॥

उदक्षिपन्पट्टदुकूलकेतूनवादयन्वेणुमृदङ्गकांस्यम् ।
कम्बूंश्च तारानधमन्समन्तात् तथाऽऽनयन् कुङ्कुमचन्दनानि ॥ ३४

उदेत्यादि—पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः

१ अत्र दीपकमलङ्कारः ।

ायुक्ताः । क्षिपेस्तौदादिकस्य ग्रहणम् । वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालम-
ादयन् वादितवन्तः । वदेर्ण्यन्तस्यैव प्रयोगः । 'जातिरप्राणिनाम् । २ । ४ ।
।' इत्येकवद्भावः । न पुनस्तूर्याङ्गत्वात् । तत्र हि प्राणिनां तूर्याङ्गाणां द्वन्द्वे-
वद्भावः । यथा मार्दङ्गिकपाणविकमिति । 'वृतॄवदिहनिकमिकषिभ्यः
: ।' इत्यौणादिकः कंसशब्दः । तदर्थाय हितं कंसीयम् । त्रपुणा दृढद्रव्यम्।
कृतिविकारभावे छः । तस्य विकार इति । 'कंसीयपरशव्ययोर्यञञौ लुक्
। ४ । ३ । १६८ ।' इति छस्य लुक् यञ् च प्रत्ययः । कम्बून् शङ्खान् ।
रान् उच्चैस्तरध्वनीन्।अधमन् शब्दितवन्तः।'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्ति-
दसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ।'
ति धमादेशः । तथा कुंकुमचन्दनानि आनयन् आनीतवन्तः । सर्वत्र लङि
पम् ॥ ३४ ॥

अन्त्येष्टिं दर्शयन्नाह—

श्रोत्राऽक्षिनासावदनं सरुक्मं कृत्वाऽजिने प्राक्छिरसं निधाय ।
सञ्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितंचिताऽग्निम्॥ ३५॥

श्रोत्रेत्यादि—अजिने कृष्णसारचर्मणि प्राक् पूर्वं शिरो मूर्धा यस्येति तं प्राक्-
रसं शवं निधाय स्थापयित्वा पश्चात् श्रोत्राक्षिनासावदनम् । प्राण्यङ्गत्वादे-
वद्भावः । वृतॄवदीत्यादिसूत्रस्यानन्तरं नयतेराचेति प्रकृतेराकारे नासेत्यौणा-
कं रूपम्। सरुक्मं ससुवर्णं कृत्वा। सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु। पात्राणि
गादीनि । यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे । ऋत्विग्याजकः ।
तौ यजतीति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ ।
९ ।' इति निपातितः । ज्वलितं चिताग्निम् । ज्वलनं चितं तदर्थमग्निं जुहाव
जुहोति स्म ॥ ३५ ॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाऽभिषेकं प्रकृतं प्रजाभिः ।
प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः ॥३६ ॥

कृतेष्वित्यादि—पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तु-
ामभिषेकमादिकर्मणि क्तः । हित्वा त्यक्त्वा । 'जहातेश्च क्त्वि । ७।४। ४३ ।'
ति हिरादेशः । रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः । विनयेन प्रसादनया न
यादरण्यं वनं प्रायात् गतवान् । भरतः सपौरः सह पौरैः । अयोध्याभवैर्ज-
ार्ययैकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति मया प्रसाद्यमानोऽपि यदि
प्रत्यागच्छेत्तदा लोके तथा मृषाप्रवादो माभूदिति च हेतोः पौरैः सह
याणम् ॥ ३६ ॥

शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तैः ।
शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाऽश्वमिश्रैः ॥३७॥

शीघ्रेत्यादि—जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभते स्म । कर्तुः क्रियाफ योगेऽपि नात्मनेपदम् । आम्प्रत्ययवदित्यत्र पूर्वग्रहणानुवृत्तेः । चकासेश्च पर पादित्वादिति विधिनियमौ स्थितौ । शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्ङ्गि गच्छद्भिरित्यर्थः । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।३ । १ । १२ ।' क्यङ् । ङित्त्वात्तङ् । ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः । अश्नोतेः सौवा कस्य आत्मनेपदिनो रूपम् । अपन्थानमुपेत्य सृप्तैः वहुत्वादमार्गमपि ग गतैः । 'ऋक्पूरब्धूःपथामानक्षे ।५ । ४ ७४ ।' इति समासान्तः प्राप्तो ' स्तत्पुरुषात् । ५ । ४।७१ ।' इति प्रतिषिद्धः सन् 'पथो विभाषा । ५ ।४।७ इति विकल्पितः । शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार । भूः भूषि भूषेति 'गुरोश्च हलः । ३ । ३ । १०३ ।' इत्यकारप्रत्ययः । 'चकासृ दी इत्यस्मात् कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्याम् । नागेन्द्ररथाश्वमिति एकवद्भावः । अल्पाच्तरस्य न पूर्वनिपातः । 'वह्वष्वनियमः ।' इति वचना तेन सेनाङ्गत्वात् कृतैकवद्भावेन मिश्रैर्युक्तैः । 'पूर्वसदृशसमोनार्थकलहनि मिश्रश्लक्ष्णैः ।२।१।३१।' इति तृतीयासमासः ॥ ३७ ।

उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितॄन्पिप्रियुरापगासु ।
आरेटुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च॥३८

उच्चीत्यादि—ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति 'जा त्यप्राणिनाम् ।२।४।६।' इत्येकवद्भावः । उच्चिक्यिरे उच्चितवन्तः । ञित्वा त् कर्तुः क्रियाफलयोगात् । 'विभाषा चेः ।७।३।५८।' इति धातोः कुत्व 'एरनेकाचः-६।४।८२।' इति यणादेशः । 'उच्चिचियिरे इति पाठान्तरं युक्त वनानीति हेतुत्वेन 'अकथितं च।१।४।५१।' कर्म । वनानि विघट्टयन्तः फल जगृहुरित्यर्थः । ततः सस्नुः स्नातवन्तः । स्नातेर्लिटि 'उस्यपदान्तात् । १ । ९६ ।' इति पररूपम् । पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्त प्रीणातेर्लिटि इयङादेशः । आपगासु नदीषु । एतत् कृत्वा पुलिनानि सं तानि इत्वा आरेटुः आरटिताः । आरेसुरिति पाठान्तरम् । शोकापनोद कियन्तमपि कालमारमन्ति स्म । 'व्याङ्परिभ्यो रमः । १ । ३ । ८३ ।' परस्मैपदम् । अशङ्कं विस्रब्धम् । छायां समाश्रित्य विशश्रमुः विश्रान्ताः॥३

सम्प्राप्य तीरं तमसाऽऽपगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

म्प्राप्येत्यादि—तमसापगायाः तमसाख्यायाः आपगायाः नद्याः । 'अत्य-
मितमिनमिरभिलभितपिपतिजनिपणिगाहिभ्योऽसच्' । यस्याः स्म-
पापं ताम्यति सा तमसा । 'तरसा' इति पाठान्तरम् । तत्र तरसा
आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां
ते यां तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः
। गङ्गेति गन् गम्यद्योरित्यौणादिको गन् । विगाहितुं विगाहिष्यामह
कृत्वा । यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलम् । पुण्यं पुण्य-
वात् पुण्ययुक्तत्वाद्वा ॥ ३९ ॥

**ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन्विशश्राम समेत्य रामः ।**
**च्युताऽशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः ॥ ४० ॥**

ईयुरित्यादि—भरद्वाजमुनेर्निकेतं आश्रममीयुः गताः । 'इणो यण्
। ४ । ८१ ।' इति यत्वम् । अभ्यासस्य 'दीर्घ इणः किति । ७ । ४ ६९ ।'
दीर्घत्वम् । यस्मिन्निकेते रामो विशश्राम विश्रान्तः । समेत्य मिलित्वा ।
युर्जना इति योज्यम् । फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया
ताशनायोऽपगतबुभुक्षः । 'अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु । ७ ।
३४ ।' इति निपातितः । व्यस्यन् उदन्यां वारयन् । असेर्दैवादिकस्य रूपम् ।
न्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥

**वाचंयमान्स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून् ।**
**अध्यापयन्तं विनयात्प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥**

वाचमित्यादि—ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्तमानं प्रणेमुः प्रण-
न्त स्म । विनयात् विनयेन । अत एव पद्गाः पदातयः पादाभ्यां गच्छन्तीति ।
न्येष्वपि दृश्यते । ३ । २ । १०१ ।' इति डः । 'हिमकाषिहतिषु च । ६ ।
५४ ।' इति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः । पदिति
गविभागाद्वा । कीदृशम् । अध्यापयन्तं पाठयन्तम् । कान् वाचंयमान् मौनव्र-
न् । 'वाचि यमो व्रते । ३ । २ । ५० ।' इति खच् । 'वाचंयमपुरंदरौ च
६ । ३ । ६९ ।' इति निपातनात् पूर्वपदस्य अमन्तता । स्थण्डिलशायिनः
शायिनः । 'स्थण्डिलाच्छयितरि व्रते । ४ । २ । १५ ।' इति णिनिः । युयु-
माणान् योक्तुमिच्छतः । योगाभ्यासनिष्ठानित्यर्थः । अनिशमविच्छेदेन मुमुक्षू-
मोक्षाभिलाषिण इत्यर्थः । अतएव योगाभ्यासमिच्छून् ॥ ४१ ॥

**आतिथ्यमेभ्यः परिनिर्विवप्सोः कल्पद्रुमा योगबलेन फेलुः ।**
**धामप्रथिम्नो म्रदिमाऽन्वितानि वासांसि च द्राघिमवन्त्युदूहुः ॥ ४२ ॥**

